॥ षोडशगणपतिस्तवम् ॥

प्रथमं बालविघ्नेशं द्वितीयं तरुणं तथा ।
तृतीयं भक्तविघ्नेशं चतुर्थं वीरविघ्नकम् ॥

पञ्चमं शक्तिविघ्नेशं षष्ठं ध्वजगणाधिपम् ।
सप्तमं पिङ्गलं देवं तथा चोच्छिष्टनायकम् ॥

नवमं विघ्नराजेन्द्रं दशमं क्षिप्रदायकम् ।
एकादशं तु हेरम्बं द्वादशं लक्ष्मिनायकम् ॥

त्रयोदशं महासंज्ञं भुवनेशं चतुर्दशम् ।
नृत्ताख्यं पञ्चदशं षोडशोर्ध्वगणाधिपम् ॥

स्तोत्रं तु विघ्नराजस्य कथ्यते षोडशात्मकम् ।
धर्मार्थकाममोक्षार्थं नराणां येन विद्यते ॥

॥ इति षोडशगणपतिस्तवम् सम्पूर्णम् ॥